सप्त, दश ॥ १० ॥ त्रिषष्टिः ॥ ६३ ॥ हरिः ॐ ॥ समिधा
ग्निम् ॥ समिधाग्ग्निन्दुंवस्यतघृतैर्ब्बोधयतातिथिम् ॥ आस्म्मि
न्हव्याजुंहोतन॥१॥ सुसंमिद्धायशोचिषें। घृतन्तीव्रञ्जुंहोतन॥
अग्ग्नयेंजातवेंदसे ॥ २ ॥ तन्त्वा । समिद्भिरङ्गिरोघृतेनंवर्द्ध
यामसि॥ बृहच्छोचायविष्ठ्य ॥ ३ ॥ उपंत्त्वा । ग्न्नेहविष्म्मंतीर्घृ
ताचीर्य्यन्तुहर्य्यत॥ जुषस्वंसमिधोमम॥४॥[४-१]भूर्भुवः॥

१ घृतैर्ब्बोधयता । अत्र परं तु रेफहकाराभ्याम् ( शु. य. प्रा. ४ अ. १०१ सू. ) इत्यनेन रकारात्परस्य बकारव्यञ्जनस्य द्वित्वम् । २ सुसमिद्धाय । अत्र भाविभ्यः सः षं समानपदे ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन सुकारात्परस्य सकारस्य षकारे प्राप्ते अनुसन्तनोतु बृहस्पतिसुतस्यसुसमिद्धाय० ( शु. य. प्रा. ३ अ. ८२ क. ) इत्यनेन सकारस्य प्रकृतिभावः न षत्वम् ।

भूर्भुवःस्वर्द्यौरिवभूम्नापृथिवीवंव्वरिम्णा ॥ तस्यास्तेपृथिविदे
वयजनिपृष्ठेग्निमन्नादमन्नाद्यायादधे ॥५॥ आयम् ॥ आयङ्गौः
पृश्निरक्क्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्प्रयन्त्स्वः ॥ ६ ॥
अन्तश्चरति । रोचनास्यप्प्राणादपानती ॥ व्यक्ख्यन्महिषोदि
वम् ॥ ७ ॥ त्रिंशद्धाम ॥ त्रिंशद्धामव्विराजतिव्वाक्पतङ्गायधी
यते ॥ प्रतिवस्तोरहद्युभिः ॥८॥ [४-२] अग्निर्ज्ज्योतिः ॥ अ

१ वाक्पतिः । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( शु. य. प्रा. ४ अ. १०० सू. ) इत्यनेन ककारस्य द्वित्वम्, तत्र पूर्वः ककारो द्विरुक्तिजः पकारः संयोगः ।

ग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः
स्वाहा ॥ अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्ज्योतिर्व्वर्च्चः
स्वाहा ॥ ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ॥ ९ ॥ सजूर्द्देवेन।
सवित्रा सजूरात्र्येन्द्रवत्त्या ॥ जुषाणो ऽअग्निर्व्वेतु स्वाहा ॥
सजूर्द्देवेन सवित्रा सजूरुषसेन्द्रवत्त्या ॥ जुषाणः सूर्य्यो व्वेतु स्वाहा
॥ १० ॥ [ २-३ ] उपप्रयन्तो ऽअद्ध्वरम् ॥ उपप्रयन्तो ऽअद्ध्वर



१ उपप्रयन्तोऽअद्ध्वरम् अत्र एदोद्भ्यां पूर्वमकारः ( शु. य. प्रा. ४ अ. ६१ सू. ) इत्यनेन सर्वत्र पूर्वरूपे प्राप्ते प्रकृतिभाव ऋक्षु ( शु. य. प्रा. ४ अ. ८१ सू. ) इत्यनेन गाहमानादिभिः सूत्रैरभिनिहितेभ्योऽन्यत्र ऋक्षु प्रकृतिभावविधानसामर्थ्यान्न पूर्वरूपम् ।

म्मन्त्रंव्वोचेमाग्ग्नयें ॥ आरेऽअस्म्मेचंशृण्ण्वते ॥ ११ ॥ अग्ग्नि

र्म्मूर्द्धा । दिवःककुत्त्पतिं÷पृथिव्व्याऽअयम् ॥ अपाꣳरेताꣳसि

जिन्न्वति ॥ १२ ॥ उभावाम ॥ उभावामिन्द्राग्ग्नीऽआहुवद्ध्यां

ऽउभाराधंसꣳसहमादयद्ध्यैं ॥ उभादातारांविषाꣳरयीणामुभा

व्वाजंस्यसातयेंहुवेवाम् ॥ १३ ॥ अयन्तें ॥ अयन्तेयोनिर्ऋत्त्वि

योयतोंजातोऽअरोंचथाꣳ ॥ तञ्ज्जानन्नंग्ग्नऽआरोहाथांनोव्वर्द्धया

१ दिवःककुत्पतिः । अत्र दिवोऽककुत्पृथिव्योः ( शु. य. प्रा. ३ अ. २४ सू. ) इत्यनेन अककुत्पृथिव्योर्विसर्जनीयस्य सकारविधानान्नात्र सकारः ककुत्परत्वात् ।

रयिम् ॥ १४ ॥ अयमिह । प्प्रथमोधायिधातृभिर्होतायजिष्ठो
ऽअद्ध्वरेष्ष्वीड्यः ॥ यमप्प्नवानोभृगवोव्विरुरुचुर्व्वनेषुचित्रंव्वि
ब्भ्वंव्विशेविशे ॥ १५ ॥ अस्यप्प्रत्नाम् ॥ अस्यप्प्रत्नामनुद्युतꣳ
शुक्रन्दुदुह्रेऽअह्रयः ॥ पयꣳसहस्रसामृषिम् ॥ १६ ॥ तनूपा ऽ
अग्नेऽसितन्न्वम्मेपाह्यायुर्दाऽअग्नेस्यायुर्म्मेदेहिव्वर्च्चोदाऽअग्ने
ऽसिव्वर्च्चोमेदेहि ॥ अग्नेयन्मेतन्न्वाऽऊनन्तन्मऽआपृण ॥ १७ ॥
इन्धानास्त्वा । शतꣳहिमाद्युमन्तꣳसमिधीमहि ॥ व्वयस्वन्तो

व्वयस्कृतᳬसहंस्वन्तᳬसहुस्कृतम् ॥ अग्नेसपत्क्दम्भंनुमदंब्धा
सोऽअदाब्भ्यम् ॥ चित्रांवसोस्वुस्तिततेपारमंशीय ॥ १८ ॥
सन्त्वम् ॥ सन्त्वमंग्ग्नेसूर्य्यंस्यव्वर्च्चंसागथाᳬसमृषीणाᳬस्तुते
नं ॥ सम्प्रियेणधाम्नासमहमायुंषासंव्वर्च्चंसासम्प्रजयासᳬराय
स्प्पोषेणग्ग्मिषीय ॥ १९ ॥ अन्धंस्त्थ ॥ अंन्धुस्त्थान्धोंवो
भक्षीयुमहंस्त्थमहोंवोभक्षीयोर्ज्जंस्त्थोर्ज्जंवोभक्षीयरायस्प्पोषं

---

१ अन्धसःस्थ इतिपदे प्रत्ययसवर्णम्मुदि शाकटायनः (३ अ. ९ क.) इत्यनेन शषसेषु मुस्संज्ञकेषु परेषु विसर्गस्य परसवर्णं भवति तने सकारे मुदि परसवर्णं प्राप्तं परन्तु जित्परे मुदि तु लुइङ्मुदि जित्परे (३ अ. १३ क.) इत्यनेन स्थे जित्परे मुदि सति विसर्गस्य लोपः। तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (४ अ. १०२ क.) इत्यनेन द्वित्वे पस्य चर्त्वे अन्धस्त्थ इति ॥

स्त्थरायस्पोषँवोभक्षीय ॥ २० ॥ रेवतीरमद्ध्वम् ॥ रेवतीरमं द्ध्वमस्म्मिन्न्योनावस्म्मिन्न्गोष्ठेस्म्मिँल्लोकेस्म्मिन्न्क्षयें ॥ इहैव स्त्तमापगात ॥ २१ ॥ सहहितासिं । व्विश्श्वरूप्यूर्ज्जामाविंश गौपत्त्येनं ॥ उपत्त्वाग्ग्नेदिवेदिंवेदोषांवस्त्तर्द्धियाव्वयम् ॥ नमोभ रंन्तऽएमंसि ॥ २२॥ राजंन्तमद्ध्वराणांम् ॥ राजंन्तमद्ध्वराणांङ्गो पामृतस्यदीदिंविम् ॥ व्वर्द्धंमानᳪस्वेदमें ॥ २३ ॥ सनंः ॥ सनंः पितेवंसूनवेग्ग्नेंसूपायनोभंव ॥ सचंस्वानःस्वस्त्तयें ॥ २४ ॥

अग्नेत्त्वम ॥ अग्नेत्त्वन्नोऽअन्तमऽउतत्त्राताशिवोभवावरू
त्थ्यः ॥ व्वसुरग्ग्निर्व्वसुश्श्रवाऽअच्छानक्षिद्युमत्तमꣳरयिन्दाः
॥ २५ ॥ तन्त्वा ॥ तन्त्वाशोचिष्ठदीदिवꣳसुम्नायनूनमीमहे
सखिब्भ्यः ॥ सनोबोधि[१]श्रुधीहवमुरुष्ष्याणो[२]ऽअघायतस्समस्
स्मात् ॥ २६ ॥ इडऽएहि ॥ इडऽएह्यदितऽएहिकाम्म्याऽएत[३] ॥

१ सः नो बोधिः । अत्र व्यञ्जने च ( शु. य. प्रा. २ अ. १६ सू. ) इत्यनेन सः इति पदस्य विसर्जनीयस्य लोपे सनोबोधिः इति सिध्यति । २ उरुष्ष्याणः । अत्र उरुष्यानः इति पदम् । अत्र निषण्णायरथवाहणमिन्द्र० ( शु. य. प्रा. ३ अ. ८७ सू. ) इत्यनेन नकारस्य णकारे, स्वरात्संयोगादि-र्द्विरुच्यते सर्वत्र ( शु. य. प्रा. ४ अ. १०० सू. ) इत्यनेन षस्य द्वित्वम् । ३ इडेएहि इतिपदम् । अत्र सन्ध्यक्षरमयवायावम् ( शु. य. प्रा. ४-अ-४७ सू. ) इत्यनेन इडे इति एकारस्य अयादेशे यवयोः पदान्तयोः स्वरमध्ये लोपः ( ४ अ. १२५ सू. ) इत्यनेन यकारस्य लोपे पुनः स्वरसन्धिप्राप्तौ "न प्रकालः" ( शु. य. प्रा. ३ अ. ४ सू. ) इति निषेधः ।

सं. ४

मयिवद्दकामधरणम्भूयात् ॥ २७ ॥ सोमानᳫंस्वरणं । कृणुहिब्ब्रह्मणस्प्पते॥ कक्षीवन्तँय्यऽऔशिजः ॥ २८ ॥ योरेवान् ॥

योरेवान्न्योऽअमीवहाव्वसुवित्त्पुष्टिवर्द्धनः[1] ॥ सनः सिषक्कुयस्तुरः ॥ २९ ॥ मानः ॥ मानःशᳫंसोऽअररुषोधूर्त्तिः प्प्रणङ्मर्त्त्यस्य ॥ रक्षाणो[2]ब्ब्रह्मणस्प्पते ॥ ३० ॥ महित्रीणाम् ॥

---

१ "पुष्टिवर्द्धनः" अत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. अ. सू. १०२ ) इति सूत्रेण पुष्टिपदे शषसहानां चतुर्णां वर्णानाम् ऊष्मसंज्ञत्वात् षकारोष्मणः परस्य स्पर्शसंज्ञकस्य टकारस्य द्वित्वं जातम् । तेनैकषकारो द्वौ टकारौ च संयोगः । तत्र प्रथमष्टकारः क्रमजो ज्ञेयः । अन्येष्वप्येतादृशेषु स्थलेषु द्वित्वं बोध्यम् । तथैव पुष्टिवर्द्धनः इत्यत्र वर्द्धनः इति पदे परं तु रेफहकाराभ्याम् ( ४-१०१ ) इत्यनेन रकारोत्तरवर्तिनः धव्यञ्जनस्य द्वित्वे जश्त्वे धकारस्य दकारः । २ रक्षाणः । रक्षा नः इतिपदम् । अत्र निषण्णाय रथवाहणम् ( शु. य. प्रा. ३ अ. ८७ सू. ) इत्यनेन नकारस्य णकारो निपात्यते ।

माहिंत्रीणामवौस्त्तुद्युक्षम्मित्रस्यार्य्यम्म्णः ॥ दुराधर्षंव्वरुणस्य ॥ ३१ ॥ नहितेषांम ॥ नहितेषाम्ममाचननाद्ध्वंसुव्वारणेषु ॥ ईशेरिपुरघशंसः ॥ ३२ ॥ तेहि । पुत्रासोऽअदितेःप्प्रजीवसेमर्त्त्याय ॥ ज्योतिर्य्यच्छन्त्यजंस्रम् ॥ ३३ ॥ कदाचन । स्त्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानंदेवस्यपृच्यते ॥ ३४ ॥ तत्त्सवितुः ॥ तत्त्सवितुर्व्वरेण्ण्यम्भर्ग्गोदेवस्यधीमहि ॥ धियोयोनःप्प्रचोदयात् ॥ ३५ ॥ शतम ॥ १०० ॥

संहि· ॥२०॥

पू. अ. ॥ ३ ॥

परिंते । दूडभोरथोस्म्माँ२ ॥ ऽअंश्नोतुव्विश्श्वतं÷ ॥ येनरक्षं
सिदाशुषं÷ ॥ ३६ ॥ [२६-४] भूर्भुवं÷ ॥ भूर्भुवंस्व÷
सुप्प्रजाःप्प्रजाभिं÷स्याᳬंसुवीरोव्वीरैःसुपोषंःपोषैंः ॥ नर्य्यं
प्प्रजाम्मेंपाहिशंᳬंस्यंपशून्मेंपाह्यथर्य्यंपितुम्मेंपाहि ॥ ३७ ॥
आगंन्म । व्विश्श्ववेदसमस्म्मभ्यंव्वसुवित्तंमम् ॥ अग्ग्नेंसम्म्राडु
भिद्युम्म्नमभिसहऽआयंच्छस्व ॥ ३८ ॥ अयमग्ग्निः ॥ अय

॥ २० ॥

१ दूडभो रथः । दुःदभः इतिपदम् अत्र "उकारं दुर्दे ( शु. य. प्रा. ३ अ. ४२ सू. )" इत्यनेन दुरित्यस्य विसर्गस्य उकारो दकारे परे दन्त्यश्च मूर्धन्यत्वमापद्यते । तेन दकारस्य उकारे दस्य मूर्धन्ये दुउडभः । सवर्णयोरुकारयोः सवर्णदीर्घः । २ सुप्प्रजाः अत्र "स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( ४ अ. १०० सू. )" इत्यने प्रजाशब्दघटितप्रकारे परे पकारस्य द्वित्वम् । एवं वरेण्ण्यम् । पुत्त्रासः । द्युम्म्नम् एतादृशेषु स्थलेषु ज्ञेयम् ।

मग्निर्गृहपतिर्गार्हपत्त्यꣳप्प्रजायांव्वसुवित्तमꣳ ॥ अग्नेगृहपते
भिद्युम्न्नमभिसहऽआयंच्छस्व ॥ ३९ ॥ अयमग्निः ॥ अय
मग्निः पुरीष्ष्योरयिमान्पुष्टिवर्द्धनꣳ ॥ अग्नेपुरीष्ष्याभिद्युम्न्न
मभिसहऽआयंच्छस्व ॥ ४० ॥ [४-५] गृहामा । बिभीतमा
वेपद्धमूर्ज्जम्बिब्भ्रतऽएमसि ॥ ऊर्ज्जम्बिब्भ्रद्वꣳसुमनाꣳ सुमेधा
गृहानैमिमनसामोदमानꣳ ॥ ४१ ॥ येषामद्ध्येति । प्प्रवसन्न्येषु

१ "प्रवसन्न्येषु" इत्यत्र "स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( १०० शु. य. प्रा. ४ अ. सू. )" इत्यनेन नकारस्य द्वित्वम् ।

सौमनुसोबुहुः ॥ गृहानुपंह्वयामहेतेनोंजानन्तुजानुतः ॥४२॥ उपंहूताऽइह । गावुऽउपंहूताऽअजावर्यः ॥ अथोऽअन्नंस्य कीलालुऽउपंहूतोगृहेषुंनः ॥ क्षेमांयवुःशान्त्यैप्प्रपंद्येशिवः शग्ग्मःशँय्योःशँय्योः ॥ ४३ ॥ [ ३-६ ] प्रघासिनोंहवाम हे । मुरुतंश्चरिशादंसः ॥ कुरम्भेणंसुजोषंसः ॥ ४४ ॥ यद्ग्रामे ॥ यद्ग्रामेयदरंण्ण्येयत्त्सभायाँय्यदिन्द्रिये ॥ यदेनं श्चकृमाव्वयमिदन्तदवंयजामहेस्वाहा ॥ ४५ ॥ मोषूणः ॥



१२४

मो[1]षूणऽइन्द्रात्रपृत्सुदेवैरस्तिहि[2]ष्म्मातेशुष्मिन्नवयाः ॥ मह
श्चिद्यस्यमीढुषोयव्याहविष्म्मतोमरुतोव्वन्दतेगीः ॥४६॥ अक्र
न्कर्म्म । कर्म्मकृतःसहव्वाचामयोभुवा ॥ देवेभ्यःकर्म्मकृ
त्वास्तम्प्रेतसचाभुवः ॥ ४७ ॥ अवभृथनिचुम्पुण । निचेरुर
सिनिचुम्पुणः ॥ अवदेवैर्देवकृतमेनोयासिषमवमर्त्त्यैर्म्मर्त्त्यकृ
तम्पुरुराव्णोदेवरि[3]षस्प्पाहि ॥ ४८ ॥ [५-७] पूर्णादर्व्वि ॥

---

१ मो षूणः । अत्र मो षूनः इतिपदम् । "निषण्णाय रथवाहणम् ( ३ अ. ८७ सू. )" इत्यनेन णकारस्य निपातः । २ हिष्म्माते । अत्र हेर्मिथोदयः ( ३ अ. ६८ सू. ) इत्यनेन मकारोदये हिशब्दात्परस्य सकारस्य षकारः । तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" इति द्वित्वम् । ३ देवरिषस्प्पाहि । अत्र "अध्वनो रजसो रिषः स्पृशस्पातौ ( ३ अ. २८ सू. )" इत्यस्मिन् पातौ इति धातुग्रहणात् पाधातो रूपे परेऽपि रिषः विसर्गस्य सकारः । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः ( ४ अ. १०२ सू. ) इत्यनेन पकारस्य द्वित्वम् ।

पूर्ण्णादर्व्विपरापतसुपूर्ण्णापुनरापत । व्वस्नेवव्विक्क्रीणावहाऽइष मूर्ज्जंꣳशतक्क्रतो ॥ ४९ ॥ देहिमे ॥ देहिमेददामितेनिमेधेहि निते दधे ॥ निहारंञ्चहरासिमेनिहारन्निर्हराणितेस्वाहा ॥ ५० ॥

[ २-८ ] अक्षन्नमीमदन्त ॥ अक्षन्नमीमदन्तह्यवप्प्रियाऽअधूषत ॥ अस्तोषतस्वभानवोव्विप्प्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥ ५१ ॥ सुसन्दृशन्त्वा ॥ सुसन्दृशन्त्वाव्वयम्मघवन्व



१ सुसन्दृशम् । अत्र "भाविभ्यः सः षं समानपदे ( ३ अ. ५९ सू. )" इत्यनेन षत्वापत्तौ "अनुसन्तनोतु बृहस्पतिसुतस्यसुसमिद्धायसुसन्दृशम्" ( शु. य. प्रा. ३ अ. ८२ सू. ) इत्यनेन प्रकृतिभावः न षत्वम् ।

न्दिषीमहिं ॥ प्रननम्पूर्ण्णवंन्धुरस्त्तुतोयासिब्वशाँ २ ॥ ऽअनु
योजान्विन्द्रतेहरीं ॥ ५२ ॥ मनोनु ॥ मनोन्वाह्वामहेनारा
शꣳसेनस्त्तोमेन ॥ पितॄणाञ्चमन्मभिः ॥ ५३ ॥ आनः ॥
आनंऽएतुमनःपुनःक्क्रत्त्वेदक्षायजीवसें ॥ ज्योक्क्रसूर्य्यन्दृशे
॥ ५४ ॥ पुनंर्न्नः । पितरोमनोददातुदैव्योजनः ॥ जीवंब्रा
तꣳसचेमहि ॥ ५५ ॥ व्वयꣳसोम । व्व्रतेतवमनंस्त्तनूषुबिभ्भ्र
तः ॥ प्रजावंन्तꣳसचेमहि ॥ ५६ ॥ [ ६-९ ] एषतें । रुद्र

भागश्सहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्त्ते[1] पशुः॥५७॥ अवरुद्रम्॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम्॥ यथानोव्वस्यसस्करद्[2]यथानः श्श्रेयसस्करद्[3]यथानोव्यवसाययात् ॥ ५८ ॥ भेषजमसि । भेषजङ्गवेश्वायपुरुषायभेषजम् ॥ सुखम्मेषायमेष्ष्यै ॥ ५९ ॥ त्र्यम्बकँय्यजामहे । सुगन्धिम्पु

१ आखुःते। अत्र "तथयोः सम् ( ३ अ. ८ सू. )" इत्यनेन तकारे परे सत्वे आखुस्ते इति रूपम्। २ वस्यसस्करत् अत्र "समानपदे च ( ३ अ. ३० क. )" इत्यप्राप्तौ "कविष्करस्कृधिषु ( ३ अ. ३२ सू. )" इत्यनेन करत्परे विसर्जनीयस्य सकारः। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" इति ककारस्य द्वित्वम्। ३ श्रेयसस्करत् अत्र "समानपदे च ( ३ अ. ३० सू. )" इत्यनेन समानपदे विसर्गस्य ककारे परे सकारः। तत "ऊष्मान्तस्थाभ्यश्च-स्पर्शः ( ४ अ. १०२ सू. )" इत्यनेन ककारस्य द्वित्वम्।

ष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्त्योर्म्मुक्षीयमामृतात् ॥
त्र्यम्बकँय्यजामहेसुगन्धिम्पतिवेदनम् ॥ उर्व्वारुकमिवबन्धं
नादितोमुक्षीयमामुतः ॥ ६० ॥ एतत्ते । रुद्रावसन्तेनं
परोमूजवतोतीहि ॥ अवततधन्वापिनाकावसःकृत्तिवासाऽ
अहिंᳫसन्नःशिवोतीहि ॥ ६१ ॥ त्र्यायुषञ्जमदग्नेःकश्यय
पस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥६२॥
शिवोनामा ॥ शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमा

मांहिꣳसीः ॥ निर्वर्त्तयाम्म्यायुषेन्नाद्यायप्प्रजननायरायस्प्पो षायसुप्प्रजास्त्वायंसुवीर्य्याय ॥ ६३ ॥ १० ॥ [ ७-१० ]
इतिश्रीवाजसनेयसंहितायांतृतीयोऽध्यायः ॥ ३ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम्॥ एदंद्वे, महीनाम्पयश्चतस्र, आकूत्याऋक्सामयोर्द्विकौ, व्रतंकृणुतषडे,षाते चतस्रो, वस्व्यसितिस्र, एषतेद्वे, शुक्रंत्वाचतस्रो,ऽऽदित्यास्त्वगष्टौ, दश सप्त त्रिꣳशत् ॥ १० ॥ ३७ ॥ ४ ॥ हरिःॐ ॥ एदम ॥ [1]एदमगन्म



१ एदमगन्। अत्र आ इदम् अत्र "कण्ठ्यादिवर्ण एकारम् ( ४ अ. ५३ सू. )" इत्यनेन कण्ठ्यात्परः इवर्णः पूर्वस्वरः परश्च एकारमापद्यते। तेन एदमगन्।

१३०